ककुप्शब्दस्य काकुभं दन्तधावनमित्यादावर्थान्तरस्मरणात् स्वाभिमतार्थ-
माह —

**ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा ॥ ६ ॥**

ककुप्कुब्जशब्दौ कुजतेरुब्जतेर्वोत्पन्नौ । कुज (च?) कौटिल्य-
5 प्रतिष्टम्भविलेखनेषु । उब्ज आर्जवे । अत्र न्यग्भावार्थः । अतः कौटिल्यन्य-
ग्भावार्थकधातुद्वयार्थस्यात्र संभवात् ककुप्शब्दः ॥ ६ ॥

अथानुष्टुभो निर्वचनमाह —

**अनुष्टुबनुस्तोभनात् ॥ ७ ॥**

स्तोभतिर्वृद्ध्यर्थः । गायत्रीतः समाक्षरपादवृद्धेः ॥ ७ ॥

10 उक्तार्थे ब्राह्मणसंमतिं दर्शयति —

**अन्वस्तौदिति हि ब्राह्मणम् ॥ ८ ॥**

निरुक्ते प्रकारान्तरेण ब्राह्मणवाक्यमुदाहृतम् । **गायत्रीमेव त्रिपदां**
13 **सतीं चतुर्थेन अनुष्टोभतीति च ब्राह्मणम्** (नि. ७. ३. १२) ॥ इति ॥ ८ ॥

---

1. SJR. ककुभ° for ककुप्°; L. °छन्दस्य for °शब्दस्य. SJR. °मतमर्थम् for °मतार्थम्.

3. L. कूजतेर्; A. कुब्जतेर् for कुजतेर् *see* CN.

4. A. om. ककुप्कुब्ज°... °रुब्जतेर्; ML. °छन्दः for °कुब्जशब्दौ; A. इत्युत्पन्नम्; ML. °वोत्पन्नः for वोत्पन्नौ; L. कूज for कुज *see* CN.

5. AK. अर्थं for अत्र; ML. om. अत्र; M. नैभव्यम्, L. नैगव्यम् for न्यग्भाव°; A. कौटिल्येनान्तर्भावात् for कौटिल्यन्यभावार्थक°.

6. निगव्य°; L. निगर्व्य° for न्यग्भाव°; T. °कर्तृ° for °धातु°. TRML. °छन्दः for °शब्दः.

7. AT. om. निर्वचनम्.

9. RSJ. add तत् before समा°.

11. T. °स्तौषीद् for °स्तौद् *see* CN.; AK. add भवति after ब्राह्मणम्.

12.. TA निरुक्तेः; R. निरुक्त° for निरुक्ते. A. adds °उक्त° before प्रकारा°.

अथ पिपीलिकामध्याया निर्वचनं वक्तुं पिपीलिकाशब्दस्य निर्वचनमाह —

**पिपीलिका पेलतेर्गतिकर्मणः ॥ ९ ॥**

न ह्यसौ क्षणमप्युदास्ते ॥ ९ ॥

इदानीं तच्छन्दोनिर्वचनमुपमाप्राधान्येन दर्शयति — 5

**पिपीलिकमध्येत्यौपमिकम् ॥ १० ॥**

पिपीलिका नामाभितः स्थूलो मध्ये कृश उद्भिज्जः प्राणिविशेषः । तन्मध्यमिव मध्यं यस्याः सा तथोक्ता । मध्यमपदलोपी समासः । अस्यास्तनुमध्यत्वमनुक्रमण्याम् — **एकादशिनोः परः षट्कस्तनुशिरा । मध्ये चेत् पिपीलिकमध्या** ॥ (शु. य. सर्वा. सू. २७-२८) इत्युक्तम् । 10

अथ बृहत्या निर्वचनमाह —

**बृहती बृहतेर्वृद्धिकर्मणः ॥ ११ ॥**

अस्या अनुष्टुप्तः सर्वपादेष्वेकाक्षरवर्धनात् प्रवृद्धत्वम् ॥ 13

---

2. R. दर्शयति for आह.

4. A. न ह्यस्यैकक्षणमप्युदा [स्ते], TK. नह्यस्यैक्षणमपि उदास्ते (T. °दात्ते स्तः) for न ह्यसौ ....

5. SJR. om. उपमाप्राधान्येन.

7. SJR. उभयतः for अभितः; AT. उद्भिद्प्राणि° for उद्भिज्जः प्राणि°.

8. L. °लोपि°, M. °लोप° for °लोपी; SJR. तस्या° for अस्या°.

9. SJR. °क्रम्य; A. °क्रमवत्याम् for °क्रमण्याम्; T. षट्चक्रः for षट्कः; A. °शिखत्वात्; T. °शिखा त्वा°; K. °शिखे त्वां°; L. शिखोर्°; M. शिखो° for °शिरा.

12. SJR. बृंहतेर्° for बृहतेर्°.

13. SJR. अनुष्टुभः for अनुष्टुप्तः; A. प्रसिद्धत्वम् K, प्रविद्धत्वम् for प्रवृद्धत्वम्.

अथ विराजो निर्वचनं बहुप्रकारमाह —

**विराड्विरमणाद्विराजनाद्विराधनाद्वा ॥ १२ ॥**

विराट्शब्दः, रमु क्रीडायां, राजृ दीप्तौ, राध साध संसिद्धौ इति त्रिभ्यो धातुभ्योऽन्यतमेनापि निष्पाद्यते। धातुत्रयार्थस्य अस्मिन् संभ-
5 वात् ॥ १२ ॥

अथ पङ्क्तेर्निर्वचनमाह —

**पङ्क्तिः पञ्चिनी पञ्चपदा ॥ १३ ॥**

पञ्चसंख्यायोगात् पङ्क्तिशब्दः पञ्चत्वप्रदर्शनपरः । [अतः] पञ्च-
पदेति ॥ १३ ॥

10 अथ त्रिष्टुभो निर्वचनं दर्शयति —

**त्रिष्टुभ् स्तोभत्युत्तरपदा ॥ १४ ॥**

स्तोभतिः स्तुतिकर्मा उत्तरपदं यस्याः सा त्रिष्टुप् ॥ १४ ॥

तदनन्तरं पूर्वपदस्य त्रिशब्दस्य किं प्रवृत्तिनित्तमिति स्वयमेव पृष्ट्वा उत्तरमपि ब्रूते —

15 **का तु त्रिता स्यात्तीर्णतमं छन्दो भवतीति ॥ १५ ॥**

---

1. T. om. बहुप्रकारमाह.

2. M. adds च after विराड्.

3. R. om. साध.

4. A, त्रयो धातवः अर्थान्तरेण for त्रिभ्यो धातुभ्यो°; SJL. अन्यतरेण for अन्यतमेन; ATL. निष्पद्यते for निष्पाद्यते; AK. स्वस्मिन्, SJR. तस्मिन् for अस्मिन्.

8. A. °दर्शनं, SJRK. °प्रदर्शनं for °प्रदर्शनपरः.

12. SJR. स्तोभ इति for स्तोभतिः *see* CN; A. अस्याः for यस्याः

13. SRJT. अस्त्युत्तरपदं, AK. अर्थान्तरं for तदनन्तरं.

14. A. विशदयति for ब्रूते.

अस्याः त्रिता त्रित्वं क्व स्याद् इति प्रश्नः । तस्य उत्तरं तीर्णतमं छन्दो भवतीति । पूर्वेभ्यो महत्त्वात् । यद्वा सकारोऽत्र लुप्तः । स्तीर्णतमम् । तरतेः स्तृणातेर्वा पूर्वं पदम् । उभयथार्थोपपत्तेः । तरणात् स्तोभनाद्वेति द्विधातुजत्वम् ॥ १५ ॥

अथ त्रिशब्दः वृच्छब्दश्च [इति] द्वन्द्वपूर्वं पदमित्याह — 5

**त्रिवृद्वज्रस्तस्य स्तोभिनीवेत्यौपमिकम् ॥ १६ ॥**

उभयतस्त्रिकोटित्वात् वज्रस्त्रिवृत् । तस्य स्तोभिनीवेति उपमाप्रधानोऽयं निर्देशः । यत् त्रिवृत् स्तोभः तत् त्रिष्टुभस्त्रिष्टुप्त्वम् इति ब्राह्मणम् ॥१६॥

अथ जगतीशब्दं निर्वक्ति —

**जगती गततमं छन्दो जज्जगतिर्भवति क्षिप्रगतिः ॥ १७ ॥** 10

पूर्वेभ्यो छन्दोभ्यो महत्त्वात् गततमत्वम् । अतिशयेन 11

---

1. SJR. अस्य for अस्याः; AMLK. त्रितायास्त्रित्वं for त्रिता त्रित्वं; SJR. अस्य for तस्य.

2. ATK. om. छन्दो भवतीति; SJR. द्वन्द्वांशलकारो°; KA. यद्द्वादश (A. शाक्षरो°) कारो° for यद्वा सकारो°; SJR. om. अत्र; SJRM. तीर्णतमं तरतेर्वा पूर्वपदम् for स्तीर्णतमम् । तरतेः... .

3. SJR. °पत्तिः for °पत्तेः; SJR. च for वा; A. after स्तोभना one folio is missing and the folio following begins with : —ते । ततः कृतयुगस्यादौ° (p. 33. l. 7).

4. T. द्विधा त्रिष्टुप्त्वम्; SJR. त्रैष्टुभत्वम् for द्विधातुजत्वम्.

5. SJR. त्रिवृच्छब्द (R. °ब्दः) पूर्वपदम् for अथ त्रिशब्दः...

6. R. स्तौभम्, KTSJ. स्तोभम्, A. स्तोभनी, M. स्तभिनी, L. स्तौभिनी for स्तोभिनी, *see* CN.; TK. एव for इव.

8. SJR. त्रिवृत्तः for त्रिवृत्; SJRT. स्तोभं for स्तोभः; SJR. om. तत्.

9. R. °च्छन्दः, SJ. °च्छन्दं for °शब्दं.

10. SJR. om. commentry on जगती... *see* CN.

11. M. बृहत्त्वम् for गततमत्वम्.

गन्तव्यं छन्दः। किंचासौ जज्ञगतिर्भवति। अनुकरणशब्दोऽयम्। तदेव व्याचष्टे — क्षिप्रगतिरिति। अतोऽपि जगतीशब्द इत्यर्थः॥ १७॥

उक्तनिर्वचने ब्राह्मणमुदाहरति —

**जज्जलाकुर्वन्नसृजतेति हि ब्राह्मणम्॥ १८॥**

5　पूर्वं प्रजापतिः जज्जलाकुर्वन् जगतीं सृष्टवानित्यर्थः। निरुक्तेऽप्येवं दर्शितम् — **जगती गततमं छन्दो जज्ञगतिर्वा जज्जलमानोऽसृजदिति च ब्राह्मणम्** इति॥ १८॥

अथ अतिच्छन्दसो निर्वचनम् —

**अतिच्छन्दाश्छदेरर्थे॥ १९॥**

10　अतिपूर्वं छन्दोऽतिच्छन्दाः। छन्दसोऽर्थज्ञानेनैवातिच्छन्दसो विज्ञानं सुलभमिति भावः। तथा च जगतीमतिक्रम्याधिकबलवत्त्वेन या वर्तते सैवातिजगतीत्येवं फलितम्॥ १९॥

अथेदानीं छन्दस एव निर्वचनं वक्ति —

**छन्दांसि छन्दयतीति वा॥ २०॥**

15　[छन्दयति] ऋ[ग्]गत[भावानि]त्यस्मात् छन्दःशब्दः। गच्छति

---

1. T. गन्तव्या for गन्तव्यं and adds पङ्क्ति [:] thereafter; MKT, जगतिर्° for जज्जगतिर्.

4. M. जलं, K. जर्झरा°, A. जर्जरा°, SJ. जज्मला° for जज्जला°.

5. M. जलं, K. जर्झरं, T. जर्जरा, for जज्जला°.

7. ML. हि for च.

8. SJR. अतिजगत्याद्यतिच्छन्दांसि निर्वक्तुमुपक्रमते for अथ...निर्वचनम्.

10. SJR. om. अतिपूर्वं छन्दोऽतिच्छन्दाः; MLTK, om. छन्दसो°... फलितम्.

13. MLT. subst. छन्दशब्दस्य निर्वचनमाह for अथेदानीं ... वक्ति.

14. RML. छदयति, K. छादयति for छन्दयति.

15. SJR. subst. छद (SJ. छन्द) संवरणे (चुरा) छदयति वर्णानिति। तथा च निरुक्तं छन्दांसि छादनात् इति (R. om इति) for [छन्दयति]... निरुक्तम्. *see* CN.

ह्येतद् वाग्जातम् । यद्वा । छादयति जपितारम् इति । **छन्दांसि छादनात्** (नि. ७.३.१) इति निरुक्तम् । **छादयन्ति ह वा एनं छन्दांसि पापेभ्य** इति ब्राह्मणम् ॥ २० ॥

अथ उक्तगायत्र्यादीनामेव एकाक्षरन्यूनत्वाधिक्याच्च ये निचृद् - भुरिक्-संज्ञके छन्दसी भवतः तयोः निर्वचनमाह — 5

**निचृत् निपूर्वाच्चृतेः भरणात् भुरिगुच्यते ॥ २१ ॥**

**चृती हिंसाग्रन्थनयोः** इत्यस्मात् निपूर्वात् निचृच्छब्दः । अस्ति च हिंसार्थोऽत्राक्षरन्यूनत्वात् । **भृञ् भरणे** इत्यस्मात् भुरित् (क्?) । अस्ति चात्र भरणमेकाक्षराधिक्यात् । न्यून [त्वा] धिक्याच्च एते निचृद्भुरिजावित्यनुक्रान्तम् ॥ २१ ॥ 10

यदर्थं गायत्र्यादिच्छन्दसां वर्णदेवतानिर्वचनानि प्रतिपादितानि तेषां मध्ये गायत्र्यां गीयमानस्य गायत्रसाम्नः सर्वेषां प्राथम्यात् [तद्-] देवता बहुधा दर्शयति— 12

---

1. M. वा जातं, L. वा जगातं, T. वाग्यातं K. वाक्यजातं for वाग्जातम् *see* CN. ; MLK. विकारम् for जपितारम्.

4. SJR. subst. तत्र गायत्र्यादिषु यथानियमं चतुर्विंशत्याद्यक्षराभावे तासां नामान्तरम् for अथ उक्त°... निर्वचनम् *see* CN. ; M. निवृत् for निचृत् ; TMK. °भुरित् for °भुरिक्.

6. TM. निवृत् for निचृत्; T. वृतेः M. सृतेः for चृतेः; SJR. split the *sūtra* into two as (1) निचृन्निपूर्वस्य चृतेः and (2) भरणाद् भुरिगुच्यते with separate introdudtion and commentary thereon. *See* CN. and Appendix A. SJ. भुरिज°, T. भूऋग् foi भुरिग्.

7. TK. वृति, M छृति for चृती; T. निवृत्, M. निछृत् for निचृत्.

8. T. हिंसनार्थः ... °न्यूनात् for हिंसार्थो ... ; ML. °न्यूनत्वम् for °न्यूनत्वात्. T. डुभृञ् for भृञ्; M. अस्य for अस्ति.

9. T. तत्र for अत्र; TK. न्यूनाधिक्यान्नैकेन (K. °न्नैके) for न्यून-[त्वा] धिकचाच्च एते ; TM. निवृद् for निचृद् ; T. इत्यन्तम् for इत्यनुक्रान्तम्.

11. SJR. यदर्थं ... *see* Appendix A, ; K. गायत्र्यादिषु for गायत्र्यादि ; T. वर्णवद् for वर्ण°; T. °दित ... त्र्यां damaged.

12. T. सर्वे ... बहुधा damaged.

**अथातो गायत्रमाग्नेयं भक्त्या भवति । देवानां वर्षीणां वा परमेष्ठिनो वा प्राजापत्यस्य साम ॥ २२ ॥**

**गायत्रं साम** इति संबन्धः । तत् **साम भक्त्या** प्रजापतेर्मुखात् सहोत्पत्तिलक्षणद्वारेण **आग्नेयम्** अग्निदेवताकं भवति । वस्तुतस्तु देवदेवत्यम् ऋषिदेवत्यं वा प्राजापत्यं वा । परमेष्ठिन्शब्दः तद्धितावयवभूतप्रजापति-शब्दविशेषणम् । परमे निरतिशयलोके तिष्ठतीति परमेष्ठी । यद्वा स्वार्थिकः तद्धितः । **परमेष्ठिनः** प्रजापतेः साम वेत्यर्थः ॥ २२ ॥

अथ यासु गायत्रं भवतीत्यतिदिष्टं तत्प्रदेशेषु उक्तदेवताकं साम गायत्रं गातव्यमित्यतिदिशति —

**सावित्रीगेयं यत्रागीतम् ॥ २३ ॥**

**यत्र** येषु प्रदेशेषु गायत्रं भवतीत्युक्तं न गीतं तत्र **सावित्री** (त्र्यां?) सवितृदेवताकायां तत्सवितुरित्यस्यां गीतं साम **गेय**मित्यर्थः ॥ २३ ॥

अथाविहितेषु यत्सावित्रीगानमतिदिश्यते तदुदाहृत्य दर्शयति —

**तत्सवितुर्वरेणियोम् । भर्गो देवस्य धीमही ऽ २ । धियो**

---

4. L. °दैवत्यम् for °देवत्यम्; T. दे[वदेवत्यं ऋषि] damaged.

5. T. शब्दतस्त्रितावयव°; for शब्दः °तद्धितावयव°.

6. K. °विशेषं for °विशेषणम्.

7. M. स्वार्थके, K. स्वार्थः for स्वार्थिकः.

8. KT. तासु for यासु; ML. add तासु before यासु; SJR. *see* Appendix A.; ML. गायत्री for गायत्रं.

10. ML. add यथा before सावित्री°.

11. T. नागीतं; K. क्रमत्वं for न गीतं; ML. om. न गीतं, *see* CN ML. add यथा after तत्र.

12. ML. add यथा before गीतं and तथा after साम.

13. M. यथा° for अथा°.

र र २
योनः प्रचो १२१२ । हुम् आ २ । दायो । आ २३४५ ॥ [इति] ॥

अथात्र ग्रन्थे विहितस्य देवतापरिज्ञानस्य फलमाह —

ऋषीणां विषयज्ञो यः स शरीराद्विमुच्यते ।
अतीत्य तमसः पारं स्वर्गे लोके महीयते ॥

सहस्रयुगपर्यन्तमहर्ब्राह्मं यदुच्यते । 5
नाकस्य पृष्ठे तं कालं दिवि सूर्य इव रोचते ॥

ततः कृतयुगस्यादौ ब्रह्मभूतो महायशाः ।
सर्वज्ञो धृतिमानृषिः पुनराजायते स्मरन् ॥ इति ॥

स्मरन्निति ॥ २४ ॥

ऋषयो मन्त्रद्रष्टारः मन्त्रज्ञाः । तेन तदाश्रितानि सामानि लक्ष्यन्ते । 10
तेषां विषयः देवताछन्दोनिर्वचनानि । तदभिज्ञो यः स तथोक्तं फलं प्राप्नोतीति शेषः ॥

यद्वा साम्नाम् ऋषिदेवतयोरुभयोरप्यपेक्षितत्वात् तदुभयप्रतिपादकार्षेय-
देवताध्यायाख्यग्रन्थद्वयस्य एकत्वाभिप्रायेण ऋषीणां विषयज्ञ इत्युपन्यासः । 14

1. SJ. after दायो । आ conclude with a note directing us to refer this mantra in उत्तरार्चिक where it has been interpreted by the commentator.

2. L. अभिहितस्य for विहितस्य.

4. K. om. अतीत्य ... रोचते.

5. MLR. ब्राह्म्यं for ब्राह्मं.

6. A. resumes from [रोच] ते । ततः ...

7. L. °पूतो for °भूतो.

10. A. om. मन्त्रज्ञाः.

11. A. विषयज्ञः for विषयः; ML. तस्योक्तं for तथोक्तं; A. तस्मात् for सः; ML. om. प्राप्नोतीति शेषः.

13. MK. om. °उभयोर्°.

ऋषीणामित्युपलक्षणम् । देवतानां विषयज्ञस्याप्युक्तं फलमस्त्येवेत्यभिप्रायः । स्मरन्निति । पूर्वजन्मादिकं स्मरन्नित्यर्थः । शिष्टं स्पष्टम् ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे देवताध्याय-
ब्राह्मणभाष्ये तृतीयः खण्डः ॥ ३ ॥

4

---

1, ML. विपयस्य for विषयज्ञस्य.

2. A. om. शिष्टं स्पष्टम्; T. after स्पष्टम् adds अभ्यासो ग्रन्थ-समाप्त्यर्थः । इति देवताध्याये तृतीयः खण्डः । वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः । इति श्रीमद्राजाधिराजराज-महेश्वरवैदिकमार्गप्रवर्तक श्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीयसामवेदार्थप्रकाशे देवताध्यायः ॥

K. concludes with देवताध्याये तृतीयः खण्डः ॥ A. इति देवताध्याय-ब्राह्मणभाष्यं समाप्तम्.

# चतुर्थः खण्डः

पूर्वस्मिन् खण्डे तत्सवितुरित्यस्यां सावित्र्यां गायत्रं गीतम् । तस्य च देवता उक्ताः । आर्षेये चायातयामत्वं ऋषयश्च प्रतिपादिताः। गानप्रकारस्य च लक्षणमुक्तं **प्रथमायां वा** (आ. ब्रा. १. १५) इत्यादिना । इदानीं गायत्र-सामाधारभूतायाः तस्याः सावित्र्याः सकलदेवतावयवत्वेन उपासनमुच्यते — 5

**अथ सावित्र्यङ्गानि व्याख्यास्यामः। शिरो ब्रह्मा। ललाटं द्यौः । चन्द्रादित्यौ चक्षुषी । मुखमग्निः । जिह्वा सरस्वती। त्वष्टा ग्रीवा । वसवश्च रुद्राश्च बाहू । उरो वायुः । रोमाणि पा(वा?)यवः। पृष्ठमिन्द्रः। विष्णुर्नाभिः। प्रजापतिर्जघनम्। ऊरू मरुतः । वेदाः पादौ। स्मितं विद्युत्। श्वसितं वायुः । अस्थीनि** 10 **पर्वताः । समुद्रा वासांसि । नक्षत्राणि अलंकारः ॥ १ ॥**

**शिरो ब्रह्मा** हिरण्यगर्भः सत्यलोकः शिरः । तथा **ललाटं द्यौः** साधिष्ठात्री। **रोमाणि वायवः** क्षुद्रावयवाः। **ऊरू मरुतः** मरुद्गणाः। अदः(धः?)-प्रत्यक्षेण परिदृश्यमानभूतलोपलक्षितम् अधोलोकसप्तकम् । **पादौ** सप्तपातालपादेत्यर्थः । **ललाटं द्यौः** इत्यनेन ललाटोपलक्षितनाभिपर्यन्ताव- 15 यवाः द्युलोकोपलक्षितोर्ध्वलोकाः [**पादौ** इत्यनेन] पादोपलक्षिताः अधो [लोकाः सप्त] इत्यर्थः । तथा च अधोर्ध्वभागः शरीरस्येति सकललोकात्मकत्वमुक्तं भवति । तथा च गायत्रीविद्यायां **गायत्री वा इदं सर्वं भूतम्** इत्यादिना 18

---

2. R. has only the text and om. the commentary thereon; M. अस्य for तस्य.

5. M. °न्वयस्त्वेन for °वयवत्त्वेन.

8. L. om. उरो वायुः; MR. om. रोमाणि पा(वा?)यवः.

13. L. पायवः for वायवः.

16. ML. °लोका इत्यर्थः । तथा चाधो [लो]क सप्तकं (M. तथा चा–धेनुसप्तकं) पादोपलक्षितोर्ध्वभागः for °लोकाः [पादौ...]... अधोर्ध्वभागः. *see* CN.

सकलचराचरात्मकत्वस्य प्रतिपादनाद् इह तु शिर आद्यवयवत्वेन प्रपञ्चजातं निरूप्यते । श्वसितं वायुः सर्वसमष्टिभूतवायुः श्वसितम् । शिष्टं निगदस्पष्टम् ॥ १ ॥

ब्रह्मादीनां देवानां लोकानां च सर्वेषां सावित्र्यङ्गत्वेनोपासनं सर्वात्मकतया एवं वेदनं कर्तव्यमित्याह —

5 **य एवं वेद ॥ २ ॥**

एतद्वेदितुः फलमाह —

**दुष्टताद्दुरुपयुक्तान्न्यूनाधिकाच्च सर्वस्मात् स्वस्ति ॥ ३ ॥**

**दुष्टता** दुष्टस्य भावः । रागद्वेषादिकलुषितमनस् [कता] तथा (-या ?) **दुरुपुयुक्तात्** दुष्टोपयोगात् अश्रद्धालसा (स्या ?) दिप्रयुक्तकरणदोषदुष्टोच्चरणात्
10 इत्यर्थः । तथा **न्यूनाधिकाच्च** न्यूनाधिकोच्चारणाच्च । किंच **सर्वस्मात्** । किं संकोचतः ? सर्वस्मात् सावित्रीजपकरणे संभावितसर्वदोषात् **स्वस्ति** मङ्गलं भवत्येव तस्य वेदितुः ॥ ३ ॥

किंच —

**स्वस्ति देवऋषिभ्यश्च ॥ ४ ॥**

15 [**देवऋषिभ्यः**] गायत्र्यनुगतेभ्यः । सकाशात् भवतीति शेषः ॥

यद्वा आर्षेयदेवताध्यायद्वयप्रतिपादितार्थवेदितुः फलं **दुष्टताद्दुरुपयुक्ता**दित्यादि । तत्र वेदाध्ययने सावित्रीजपे च संभावितसर्वदोषात् स्वस्ति भवतीति । अत एव देवता **देवऋषिभ्यश्च** [इति] । देवा ऋषयश्च ये आर्षेयदेवताध्यायाभ्यां प्रतिपादितास्तत्सकाशाच्च स्वस्ति भवति । ते तु सम्यक्प्रयोगेऽपि
20 मन्त्रानुगताः प्रीताः सन्तः स्वस्ति कुर्वन्तीत्यर्थः ॥ ४ ॥

---

2. L. निगदतः for निगद°; S. subst. निगदतःस्पुटम् for निगद°...
3. M. °त्र्यर्भकत्वेन° for त्र्यङ्गत्वेन°.
7. LR. दुष्टुता *see* CN.
15. ML. transp. the sutra: ब्रह्मसत्यं ... after भवतीति शेषः.
17. M. संभावितस्य दोषात् for संभावित....
19. M. adds इति after भवति; M. तत्° for ते तु.

ब्रह्म सत्यं च पातु मामिति ॥
ब्रह्म सत्यं च पातु मामिति ॥ ५ ॥

**ब्रह्म** वेदः सावित्र्या सह **सत्यं च** तदुभयगतमवितथत्वं याथार्थ्यं च वास्तवं विद्यमानं दुष्टप्रयोक्तारम् अन्यथा च न्यूनाधिकभावेन प्रयोक्तारमपि **मां पातु**। तादृशदोषजन्यप्रत्यवायाद् रक्षत्विति प्रार्थयेदित्यर्थः । दुष्टादुरुपयुक्ता- 5
दित्यादिकोऽयं मन्त्रः । स्वस्त्यस्तु मङ्गलानि भवन्तु । द्विरुक्तिर्देवताध्यायपरि-
समाप्त्यर्था । प्रार्थनायामादरार्था च ॥ ५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे 10
देवताध्यायब्राह्मणभाष्ये चतुर्थः खण्डः ॥ ४ ॥

॥ देवताध्यायब्राह्मणभाष्यं समाप्तम् ॥ 12

ॐ

---

3. M. अपि तथात्वयाथार्थ्यं, L. अवितत्वयाथार्थ्यं for अवितथत्वं याथार्थ्यं.

4. L. न्यूनाधिकारन्यूनभावेन for न्यूनाधिकभावेन.

7. M. °मादरार्थता for °मादरार्था.

ॐ

## CRITICAL NOTES.

P. 8. L. 14.

All the three printed editions read सर्वत्र सामतश्चतुर्विधः स्वरो निधनमिडा वागिति for सर्वत्र साम्नां चतुर्विधं निधनम्. The commentator, while interpreting the *Sūtra* इडानिधनानि..., first explains the word निधन which is a general technical name in Sāma literature for the concluding part of a *Sāma-gāna.* A Sāma-gāna is normally divided into five parts *viz.*, प्रस्ताव, उद्गीथ, प्रतीहार, उपद्रव and निधन. The first of these is sung by प्रस्तोतृ, the second and fourth by उद्गातृ, the third by प्रतिहर्तृ and the last by all the three in chorus. It is this last part, which often does not form part of a *Yonimantra,* that is called *Nidhana.* Because of this five-fold division, Sāma-gāna is said to be पाञ्चभक्तिक and if Praṇava (ओंकार) and हिंकार (हुम्कार) are added to these divisions it may be called साप्तभक्तिक as well.

This last part of the Sāma-gāna which is technically called *Nidhana* is of four kinds *viz.*, स्वर, निधन, इडा and वाक्. The word सामतः above in the printed editions makes no sense and चतुर्विधः in the sentense could go only with स्वरः. It, thus, would imply that स्वर is of four kinds! For this reason in his edition Shri Ramanatha Dikshitar corrects सामतः as सामान्तः later in the Errata. But this correction is not based on the authority of mss.

— L. 10.

The sentence तदेतदेवान्ते [निधनम्] अन्तर्निधनमिति द्वेधा is found in AK as स एवान्तर्निधनमिति द्वेधा and in RSJ as स एवान्तर्निधनं बहिर्निधनमिति द्वेधा. It is clear that स एव in AK is wrong because it refers to चतुर्विधं (निधनम्), of the previous sentence. It is further clear that the sentence स एवान्तर्निधनमिति द्वेधा is incomplete as some passage is evidently dropped from it. In the printed editions बहिर्निधनम् was obviously added in contrast to अन्तर्निधनम् to make up the two kinds. But this insertion does not seem

to be authentic for no Ms gives this reading. It may be pointed out here that the commentator divides the Nidhana first into four-fold and again the same into two *viz.*, अन्तेनिधन and अन्तर्निधन on the basis of the end or concluding part of a Sāma-gāna, which in many instances, is also found in the middle of the Sāma-gāna as well. Thus the Nidhana could ultimately be divided into eight-fold. This अन्तर्निधन is also known as मध्येनिधन or स्तौभिकनिधन. The Samhitopaniṣad Brāhmaṇa states that the three Saman priests in Ūhagāna elaborate the अन्तः सामिकानि निधनानि of Geya-gāna and Āraṇya-gāna in different *svaras*. It says: अन्ततो निधनसामान्याद् अन्तःसामिकानि निधनानि संप्रसारयन्ति ।। (3.1). We have stated above (vide CN.P. 8. L. 14) that a Sāma-gāna is sung in five stages by respective priests and the fifth which is Nidhana by all the three. Now the doubt as regards the singing of *antar-nidhana* is cleared by the Samhitopanisd Brāhmaṇa, for the *antar-nidhana* is not included in the five-fold or seven-fold division of the Sāmagāna and hence naturally the question comes up who among the three Saman priests should sing it. Since it is called Nidhana, the answer is, that it should be sung by all the three priests together, just as the real Nidhana is sung. Dvijaraja-bhaṭṭa, the commentator, clearly states: अनेन वाक्येनैवमुक्तं भवति स्तोत्रत्वेन गीयमानेषु सामसु साममध्ये यानि निधनसदृशानि पदानि आर्चिकानि स्तौभिकानि वा तानि निधनत्वेन प्रयोक्तव्यानीति. Only the last part of the Sāma-gāna could be strictly called Nidhana. Therefore the commentator explains the additions in the middle of the Sāma-gāna which are also repeated at the conclusion, as निधनसदृशानि.

Now the reading बहिर्निधनम् found in SJR does not seem to be appropriate because Nidhana, though comes at the end of Sāma-gāna, is an integral part of the *gāna*. Further, as far as we know, बहिर्निधन is not the term that is normally used in this connection any way.

P. 9. L. 8.

RSJ. इडानिधनाद्युक्तेभ्यः वक्ष्यमाणेभ्यो व्यतिरिक्तानि यानि निधनवन्ति सन्ति तानि सर्वाण्यैन्द्राणीति जानीयात् for इडानिधनानीत्याद्युक्तेभ्यः.

It may be seen here that all three printed editions give wrong and confused readings and that the sentence, as it is, makes no sense. These editions have omitted the passage सर्वाणि स्वाराणि प्राजापत्यानि इति and consequently rendered the sentence un-intelligible. The reading in ms. A is inaccurate only to the extent that it removed अन्यानि from its context and transposed it after निधनानि. इडानिधनानीत्याद्युक्तेभ्यः here refers to the previous *Sūtra:* इडानिधनानि पदनिधनानीकारणिधनानीत्याग्नेयानि, just as वक्ष्येमाणेभ्यः does the following. We have, therefore, added अन्यानि in square bracket as it was evidently left out by all Mss. by mistake.

P. 10. L. 9.

काव (ग्राम. १.३.३२.१) has been cited as an example for ऋक्साम which does not seem to be correct, because, unlike औशन (ग्राम. १.१.५.३), it ends in Nidhana of ओ २३४५ इ । डा, and this Nidhana is not part of the ऋक्. The Brāhmaṇa here groups the *Sāmans* according to *Nidhanas* i.e., the concluding syllables of a *gāna*, on the basis of which these *gānas* have been attributed to respective Vedic deities. The ऋक्समन्s which have no stobha forming Nidhana at the end, but part of the last syllables of the ऋक्, are attributed to सोम. For example The *Sāman* औशन ends in Nidhana of नवेदिया २३४५म् which is the elaboration of न वेद्यम्, the last words of the verse प्रेष्ठं वो अतिथिम् (सा. ५.).

P. 13. L. 8.

The printed editions read: स्वरादित्रितयव्यतिरिक्तस्य निधनमिति रूढ्या नामधेयमिति पूर्वमेवोक्तम् which is not correct because the last of the स्वरादित्रितय cannot be निधन but only वाक्, if we follow the order in which they are cited earlier. The commentator here explains the Sūtra: वसूनां ..., where the four groups of deities who preside over the respective Sāma-gānas characterised by the four kinds of Nidhanas are referred to. Here the commentator again, in order to leave no doubt or ambiguity about the meaning of Nidhana in the mind of a reader explains that Nidhana here stands for that concluding part of a Sāma-gāna which is neither स्वर, nor इडा nor वाक्. This explanation was neces-

sitated because while Nidhana is a common name for all the four kinds of Nidhanas, is also the name of a particular kind of Nidhana. Therefore the sentence in RSJ is wrong.

P. 18. L. 12.

The Sūtra: ये यज्ञेषु प्रयोक्तव्यास्तेषां दैवतमुच्यते is out of place and context here since it intervenes between the Sūtras which speak of the colours assigned to respective Vedic metres. This Sūtra ought to have come after the following two Sūtras *viz.*, विराजः पृश्नयो विद्यात् ॥ ५ ॥ and दैवतं तत उत्तरम्॥ ६ ॥. After having spoken of colours of the respective metres the Brāhmaṇa introduces here another topic with the Sūtra: दैवतं तत उत्तरम्, which says that hereafter the deities (of the respective metres) are being explained. Therefore the natural place for ये यज्ञेषु ... would have been after दैवतं... ॥ ६ ॥. We have, however, not changed the order of the Sūtras for want of Mss. evidences.

P. 20. L. 8.

The Brāhmaṇa has incorporated two verses from the Ṛgveda *viz.*, अग्नेर्गायत्र्यभवत् (RV. X. 130.4) and विराण्मित्रावरुणयोः (RV. X. 130.5) as part of its sūtra text for describing the deities of different metres. Here the word चाक्लृप्रे of the second verse is wrongly written in all mss. as चक्लृप्त° which the printed editions also have retained. The correct form evidently should be चाक्लृप्र (See Sayana RV. X. 130.5).

P. 22. L. 2.

SJR स तु न K सकूलं for सतुलं. The editions comment on it as तु-शब्दः शङ्कानिवृत्त्यर्थः । स पुरुषः न मन्येत । छन्दसामुक्तदेवताकत्वे प्रमाणं नास्तीति न शङ्केत । This commentary, it may be seen, does not fit in the context at all. सतुलं मन्येत ... भवन्तीति is one continuous expression which cannot be separated or split. But in the commentary in SJR स तु न मन्येत has been taken as a separate sentence and इति after भवन्ति has been dropped. Further the text छन्दसाम् हैतद्दैवतम् which forms a separate Sūtra has been merged with स तु न मन्येत and read as one single Sūtra. There is nothing in the context or in the previous Sūtra or Sūtras

to which स, if taken as a separate word, could refer. SJR however explains it as स: पुरुष:. But no such a person has been mentioned here or in the fore-going lines whom the succeeding Sūtra could refer to.

The mss. ML at the end of the commentary on the Sūtra state that if the reading is समनुमन्येत and not सतुलं मन्येत then the construction of the sentence will be संभवन्तीत्यनुमन्येत विद्यादित्यन्वय:. It becomes clear from this that different readings in this Sūtra were prevalent which were tampered with by the scribes. Any way स तु न मन्येत is absolutely wrong and has been grafted on the Sūtra without properly understanding the meaning. In case of न and ल, there is no chance of confusion, perhaps except in Maithili, where they are often confounded because of very close similarity of the scripts. Therefore it is a meddling done not by a mere scribe but by one, not ignorant of Sanskrit, who not only altered the text, but also added commentary explaining that part which he 'corrected.' Therefore तु शब्द: ...शङ्केत is an interpolation done in an effort to justify the wrong reading. The Adyar ms. treat सतुलं (A. स तु न) and छन्दसामु ...as two separate Sūtras though part of the commentary is lost therein. K has mixed up both the commentary and text here and at the same time also has lost some passages both in the commentary and the Sutras. It is only the mss. ML which have preserved the text and commentary without much confusion and meddling.

P. 23. L. 15.

SJR उदपतदुदगच्छत् तत: अतोऽपि... The words from the text are being explained here one by one and the word that follows उदपतद् in the text is हि of which the explanation is consequently called for. Therefore the word तत: here appears to have been wrongly written for यत: which is the meaning of हि. In AT this portion is missing because of damage to the manuscripts. It is, however, to be noted here that the manuscript L has यत: instead, which is the correct reading. We have, therefore, accepted the reading as उदगच्छत् [हि] यत: adding

हि of the *Sūtra* in square bracket which was obviously dropped by the scribes by oversight from the commentary.

P. 26. L. 11.

अन्वस्तौद्... The commentator, while explaining the etymological meanings of the word अनुष्टुभ्, says that अनुष्टुभ् is so called because of its expansion from the basic metre of गायत्री. This explanation, however acceptable it might appear, does not seem to be what the Brāhmaṇa actually intended, particularly in view of the next Sūtra अन्वस्तौदिति हि..., which further elaborates the word on the authority of a *Brāhmaṇavākya*. Now the verb अन्वस्तौत् does not mean expansion but only praise or laud. The praise may be in a way expansion, वृद्धि, in the sense of exaggeration of the qualities in a person. But it is too much to take this as the expressive meaning of अनुस्तोभन. Therefore, the commentary स्तोभतिर्वृद्ध्यर्थः। गायत्रीतः समाक्षरपादवृद्धेः appears to be an interpolation

The verb स्तोभति in the Veda means only to praise just as स्तौति does. The commentator later expressly makes this clear while explaining the Sūtra त्रिष्टुभ् स्तोभत्युत्तरपदा. He says: स्तोभतिः स्तुतिकर्मा उत्तरपदं.... Therefore अनुष्टुभ् should mean a metre which praises, i.e., a metre employed in praising the gods. The word श्लोक which is the popular name given to this metre in classical literature, in fact, implies only this meaning.

P. 26. L. 3. कुजते: see Notes below.

— L. 4. कुज (च?) कौटिल्य प्रतिष्टम्भविलेखनेषु.

The Brāhmaṇa, while explaining the meaning of the word ककुप् says that the word may have been derived from either कुजति or उब्जति because the metre, in its *madhyapāda* has uneven syllables, compared to its remaining three padas. The Brāhmaṇa assumes that the word ककुभ् means both elevated as also straight (आर्जव) or sunk or bent down (न्यग्भाव) and it compares the metre with the back of a bull which has a portruding hump thereon (ककुदल्पिणीत्यौपमिकम् ।। ६. ७. ।।).

Now there is no root like कुज in the Dhātupaṭha which would mean कौटिल्यप्रतिष्टम्भविलेखनेषु. The London ms. has कूजति

and कूज in the text and commentary respectively instead. But even कूज does not mean कौटिल्य; it implies but inarticulate sound like cooing of a bird. Therefore कुजति (or कूजति) of the Sūtra and कुज (or कूज) of the commentary appear to be wrong. But there is the root कुच in भ्वादि which means संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु. The Brāhmaṇa must be referring to this root and expounds that ककुप् is composed of two roots, partly of कुच and partly of उब्ज. It has taken, according to the Brāhmaṇa, कु from the first (with reduplication of course) and उब्, the ending, from the second (leaving ज). Thus while the word ककुप् was derived jointly from these two roots it also naturally inherited the meaning of both the roots. This etymological explanation may be brushed aside as quite fanciful but then many of the etymologies in the Nirukta are of this nature and the Brāhmaṇa faithfully follows what has been said in the Nirukta in this respect.

— L. 11.
P. 28. L. 12.

In all mss. and the printed editions the text we have is only स्तोभ इत्युत्तरपदा whereas in the commentary MLA refers to it as स्तोभत्युत्तरपदा. The Brāhmaṇa states here that the word त्रिष्टुप् consists of a second member which is derived from the verb (root) स्तोभति to mean to praise, laud. Therefore the text should be स्तोभत्युत्तरपदा and not स्तोभ इत्युत्तरपदा. Again स्तोभ is not the root but a derivative and the second member is not स्तोभ but स्तुभ्. Therefore the reading should be either स्तोभति implying the root or स्तुभ् which is the actual form.

The Brāhmaṇa is concerned here with the derivation of the second member of the metre and not the actual form thereof which is already seen there. The Nirukta also says only त्रिष्टुभ् स्तोभत्युत्तरपदा (Nir. vii-12) which the Brāhmaṇa closely follows in the matter of etymology. We have, therefore, corrected the reading accordingly.

P. 29. L. 6.

R. स्तौभमिवेति, SJ स्तोभमिवेति, T स्तोभमेवेति, M स्तभिनीति, L. स्तौभिनिवेति, and A1. स्तोभिनीवेति. It may be seen here

that no two mss. agree. From the previous usages such as ककुद्रूपिणीति and वोष्णीषिणीति we may expect that the reading should likewise be स्तोभिनीवेति or स्तौभिनीवेति. स्तोभम् is evidently wrong as the word must be masculine and not neutral. We have therefore accepted the reading as found in AI. The corresponding passage in the Nirukta is: त्रिवृद्वज्रः। तस्य स्तोभतीति वा ॥ (Nir. vii-12). Could it be here also स्तोभतीति वेति?

—L. 10. and P. 30. L. 4.

The printed editions merge the Sūtras 17 & 18 into one and have printed no commentary on these Sūtras.

The commentary in MLT on दे. ब्रा. 3. 20 onward on one hand, and that in printed editions on the other, entirely differs from each other. The later two printed editions, it must be noted, are, for all practical purposes, the faithful reprints of the first *i.e.*, the edition of Satyavrata Samashrami, but under different editorship. It is difficult to say which of these two commentaries is to be accepted as genuine. It may be said here that the commentary on the minor Brāhmaṇas of Sāmaveda, though appears on the name of Sayana, may not be actually written by him. The language, style and the way of explanation do not really give the impression that the commentary on the minor Brāhmaṇas were written by that great Vedic commentator.

Whoever may be the real author of the commentary on the Devatādhyāya, it is clear that either the commentary in printed editions or that in MLT must be spurious. Satyavrata Samashrami in his edition doubts if the commentary hereafter was written by Sayana at all— अथैतदादीनां सायणकृतं भाष्यं मृग्यम्. We are, however, of the opinion that the mss. MLT have preserved the original commentary.

P. 30. L. 5.

The printed editions explain the word छन्दः as छद संवरणे (चुरा°) छदयति वर्णानिति। This explanation does not seem to be correct, for a metre does not cover the syllables. What the metre does is that it covers the ideas with the syllables arranged in a systematic way. But if छदयति is to be derived from छद

(ऊर्जने) of भ्वादि then छदयति वर्णान् would mean energising or animating the syllables— छदनं प्रयुङ्क्ते छदयति । बलवन्तं प्राणतन्तं वा करोतीत्यर्थः–. It is clear that this meaning is not applicable to छन्दस्.

छन्दस्, therefore, can be derived only from छदि (not छद) संवरणे and not from छद अपवारणे (छादयति) or छद अपवारणे स्वरितेत् (छादयति, छादति, छादते) because from the latter the abstract noun could be only छदः or छदिः. The root छदि may also mean to protect or prevent from, and the commentator therefore alternatively explains it as छादयति जपितारं — protects a reciter (of the Vedas from sins) or prevents him from (being hurt by evil spirit). In support of this explanation a quotation from Brāhmaṇa छादयति ह वा एनं छन्दांसि पापेभ्यः is cited in the commentary.

P. 31. L. 1.

वाग्जातम्. The reading in MLT is corrupt. K has वाक्यजातं instead. What the commentator says here is that the वाग्जात *i.e.*, the syllables in a verse are always so arranged as to suit a particular metre. We have, therefore, accepted वाग्जातं as the correct reading.

— L. 4 & 6.

The editions SJR substitute: तत्र गायत्र्यादिषु...तासां नामान्तरमाह। for अथ उक्त-गायत्र्यादीनामेव ... तयोः निर्वचनमाह।. The sentence in SJR is wrong and does not make a positive statement. तासां the feminine genetive plural, if it refers to छन्दांसि, which it does, must be changed to तेषां. Again the succeeding Sūtra not only says simply the name but its derivation as well. The purpose of this Khaṇḍa, as expressly stated in the beginning (अथातो निर्वचनम्), is to explain the etymology of the existing names of the metres which are already known in छन्दःशास्त्र. Therefore, I am led to believe that the commentary printed in SJR on Sūtra 3. 20 onward is not by the same person who had commented on the earlier Khandas. Satyavrata Samashrami has acknowledged this fact. All these editions unfortunately have taken little notice of the Southern mss. which have preserved better and more reliable readings.

Further SJR divides the Sūtra 21 into two as निचृन्निपूर्वस्य चृतेः and भरणाद्भुरिगुच्यते with separate introduction and commentary thereon. अत्र गायत्र्यादिषु... referred to above is the introduction on the first *Sūtra.*

P. 32. L. 11.

न गीतं. T reads this as नागीतं while M & L omit it. The latter explain the Sūtra: यत्र येषु प्रदेशेषु गायत्री भवतीत्युक्तं तत्र यथा सावित्रीसवितृदेवताकायां तत्सवितुरित्यस्यां यथा गीतं साम गेयमित्यर्थः. This explanation is vague and does not say what should be sung after the manner of *Sāvitri.* The Sūtra is specific and states that in all such places where it is said that Gāyatri will be sung but the mantra is not specified, one should sing that mantra of which Sāvitri is the goddess, *viz.*, तत्सवितुः. The point here is that the Gāyatri means only a particular metre like Triṣṭup and when only the name Gāyatri is referred to as to be sung the question is what particular mantra in this chandas one should sing. The Sūtra clarifies the doubt expressing that in all such places the mantra तत्सवितुः should be sung. The Brāhmaṇa then gives the Sāma-gāna of तत्सवितुः with svara as it is sung in वेयगान. We have therefore accepted the readings of T with modification of नागीतं as न गीतं.

P. 35. L. 16 & 17.

The sentences after द्युलोकोपलक्षितोर्ध्वलोकाः upto उक्तं भवति are mixed up and as a result there is a little confusion in the construction of the sentences. We have therefore rearranged them with slight adjustment adding the words in square brackets which were left out. Since the mss. M and L appear to be the discendants or copies a common ms. same confusion prevails in both the mss. though L has generally preserved more correct readings wherever there were variants.

P. 36. L. 8.

ML and R read दुष्टता (LR. दुष्टुता) दुरुपयुक्ता न्यूनाधिका च सर्वस्मात् स्वस्ति ।. But in the commentary the text is quoted as दुरुपयुक्तात् and न्यूनाधिकाच्च which are the correct readings. We have, therefore, corrected the text accordingly.

## APPENDIX A.

The commentary on Sūtras 3. 19 onward printed in SJR, which totally differs from that found in MLJ, is given below for comparison. The Adyar Ms. has no commentary on these Sūtras. The variants, wherever they are found, are given in the foot-notes.

**छन्दांसि छन्दयतीति वा ॥ १९ ॥**

छन्द संवरणे (चु. उ.) छदयसि वर्णानिति । तथा च निरुक्तम् — **छन्दांसि छादनात्** (दै. १. १) ॥

तत्र गायत्र्यादिषु यथानियमं चतुर्विंशत्याद्यक्षराभावे तासां नामान्तर-माह । 10

**निचृन्निपूर्वस्य चृतेः ॥ २० ॥**

एकाक्षरन्यूनासु गायत्र्यादिषु निचृदिति । चर्चयति ऋग्गतभावानिति चृत् छन्दः । निकृष्टमेकाक्षरेण हीनं निचृत् । तथा च पिङ्गलः **ऊनाधिकेनैकेन निचृद्भूरिजौ** (३. ५. ९) इति ॥

एकाक्षराधिक्ये संज्ञान्तरमाह — 15

**भरणाद्भुरिगुच्यते ॥ २१ ॥**

एकाक्षरेण भरणात् चतुर्विंशत्यात्मकगायत्र्यादाविति शेषः ॥

अथो सामसु गायत्रस्य प्रशस्ततया तदेवात्र उपसंहारे स्तौति —

**अथातो गायत्रमाग्नेयं भक्त्या भवति देवानां वर्षीणां वा परमेष्ठिनो वा प्राजापत्यस्य साम ॥ २२ ॥** 20

अथेत्यानन्तर्यवचनः । अत इत्यधिकारार्थः । आग्नेयम् अग्निदेवताकं 21

---

9. SJ. °नियम° for °नियमं.

12. S. चर्तयति for चर्चयति ; SJ. add संदीपयति before ऋग्°.

13. SJ. शब्दः for छन्दः.

15. SJ. add तथा before एका°.

16. SJ. भूरिजः for भुरिग्.

यद्गायत्रं साम तद्धि देवानां वा ऋषीणां वा परमेष्ठिनः प्राजापत्यस्य वा सर्वस्यैवेत्यर्थः । भक्त्या संभजनेन भवति भवेत् ॥ २२ ॥

गायत्रसाम्नः किं मूलमित्याह —

**सावित्रीगेयम् ॥ २३ ॥**

5 सावित्रीनामर्चि **तत्सवितुर्वरेण्यमित्यत्रैव** गेयं प्रशस्तम् । एतदनु अन्यत्रापि गेयमूहतः ॥ २३ ॥

ननु गानग्रन्थेषु कथं तत्रोपलभ्यते इत्याह —

**यत्रागीतम् ॥ २४ ॥**

यत्र गानग्रन्थादौ अगीतं तत्रैव गानं प्रशस्तम् इत्यर्थः ॥

10 किं तदिति स्वरूपं दर्शयति —

**तत्सवितुर्वरेणियोम् । भर्गोदेवस्य धीमहीऽ २ । धियो योनः प्रचोऽ १२१२ ॥ हिंस्थि आऽ २ । दायो आऽ ३४५ ॥**

सावित्र्याख्यर्चस्वरूपं तु उत्तरार्चिकषष्ठप्रपाठकीयतृतीयार्धे श्रुतस्य दशम-सूक्तस्य प्रथमर्क्पाठतो ज्ञेयः । व्याख्यातश्चापि तत्रैवेति ॥

15 **ऋषीणां विषयज्ञो यः शरीराद्विमुच्यते ।**
**अतीत्य तमसः पारं स्वर्गे लोके महीयते ॥**

**सहस्रयुगपर्यन्तमहर्ब्राह्मयं यदुच्यते ।**
18 **नाकस्य पृष्ठे तं कालं दिवि सूर्य इव रोचते ॥**

---

9. SJ. after यत्र add सावित्रीनामर्चि.

12. SJ. प्र । चोऽ१ऽ२१ऽ२हम् । for प्रचोऽ....

13. SJ. °ख्यर्क् स्वरूपस्तु for °ख्यर्च ....

14. J. तत्रैतेन for तत्रव; SJ. ends after this with:

॥ इति तृतीयः खण्डः ॥

॥ समाप्तं च दैवतं ब्राह्मणम् ॥

ततः कृतयुगस्यादौ ब्रह्मपूतो महायशाः ।
सर्वज्ञो धृतिमानृषिः पुनराजायते स्मरन् ॥ इति ॥

स्मरन्निति ॥

अथ सावित्र्यंगानि व्याख्यास्यामः । शिरो ब्रह्मा । ललाटं द्यौः । चन्द्रादित्यौ चक्षुषी । मुखमग्निः । जिह्वा सरस्वती । त्वष्टा ग्रीवा । वसवश्च बाहू । उरो वायुः । पृष्ठमिन्द्रः । विष्णुर्नाभिः । प्रजापतिर्जघनम् । ऊरू मरुतः । वेदाः पादौ । स्मितं विद्युत् । श्वसितं वायुः । अस्थीनि पर्वताः । समुद्रा वासांसि । नक्षत्राण्यलंकारो य एवं वेद दुष्टुतादुरुप्रयुक्तान्यूनाधिका च सर्वस्मात् स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्यं च पातुमामिति ब्रह्म सत्यं च पातु मामिति ॥ 5

॥ इति देवताध्यायाख्यं ब्राह्मणं समाप्तम् ॥ 10

## APPENDIX B.

In chapter 3 etymology of some of the Vedic metres are discussed and the passages therein are almost identical with those found in the Nirukta where these metres are etymologically explained. For the sake of easy reference and comparison all the relevant portion from Nirukta is given below.

.... छन्दांसि च्छादनात् .... गायत्री गायतेः स्तुतिकर्मणस्त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणम् । उष्णिगुत्स्नाता भवति । स्निह्यतेर्वा स्यात्कान्तिकर्मणः उष्णीषिणी वेत्यौपमिकमुष्णीषं स्नायते । ककुप् ककुभिनी भवति । ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा । अनुष्टुबनुष्टोभनात् । गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम् । बृहती परिबर्हणात् । पङ्क्तिः पञ्चपदा । त्रिष्टुप् स्तोभत्युत्तरपदा । का तु त्रिता स्यात्तीर्णतमं छन्दः । त्रिवृद्वज्रस्य स्तोभनीति वा । यत् त्रिरस्तोभत् तत् त्रिष्टुभस्त्रिष्टुप्-त्वम् इति विज्ञायते ॥ १२ ॥

जगती गततमं छन्दो जलचरगतिर्वा जल्गल्यमानोऽसृजदिति च ब्राह्मणम् । विराड्-विराजनाद्वा विराधनाद्वा विप्रापणाद्वा विराजनात् संपूर्णाक्षरा विराधनादूनाक्षरा विप्रापणादधि-काक्षरा । पिपीलिकमध्येत्यौपमिकम् । पिपीलिका पेलतेर्गतिकर्मणः इतीमा देवता अनुक्रान्ताः (१३) ॥

— ( निरुक्ते सप्तमाध्याये १२–१३ खण्डौ. )

---

# APPENDIX C.

The sāmāns quoted by *pratīka* or by the technical names of the sāmagānas either in the text or commentary are listed below in alphabetical order. In case of *pratīkas*, the respective technical names of the gānas and in case of technical names the verses which they represent are also given against each.

## I

| *Verse.* | *Reference.* | *Technical name.* | *Page.* |
|---|---|---|---|
| अभि सोमास आयवः | (ग्राम. १५.५.५१८.५) | स्वःपृष्ठमांगिरसम् | ११ |
| आ पवस्व सहस्रिणम् | (ग्राम. १४.४.५०१.१) | सोमसाम (सारस्वतम्) | ११ |
| इन्द्रो विश्वस्य राजति | (ग्राम १२.११.४५६.१-२) | वैराजम् (एकपदा) | १८ |
| इमा नु कम् | (ग्राम. ११.१२.४५२.१) | भारद्वाजम् (द्विपदा) | १८ |
| उप नो हरिभिः सुतम् | (ग्राम. ४.४.१५०.२) | सुतंरयिष्ठीयम् (आग्नेयैन्द्रम्) | १२ |
| कया नश्चित्र आ भुवत् | (ग्राम. ५.६.१६९.२) | वाचःसाम (वाङ्निधनम्) | ११ |
| तत्सवितुर्वरेणियोम् | | गायत्रम् (सावित्रीगानम्) | ३२ |
| पिबा सोममिन्द्र मन्दतु | (ग्राम. १०.५.३९८.१) | वैराजम् | १८ |
| य आनयत् परावतः | (ग्राम. ३.२.१२७.१-२) | आभरद्वसवे (ऐन्द्राग्ने) | १२ |
| यस्ते मदायां | (ग्राम. १३.१.४७०.३) | प्राजापत्यम् (आग्नेयैन्द्रम्) | १२ |
| सहो रयिष्ठाः | ,, ,, | ,, ,, | ,, |
| सुतं रयिष्ठाः | (ग्राम. ४.४.१५०.२) | सुतंरयिष्ठीयम् (आग्नेयैन्द्रम्) | १२ |

## II

| *Technical name.* | *Reference.* | *Verse.* | *Page.* |
|---|---|---|---|
| अभीवर्तः (त्वाष्ट्रम्) | (ग्राम. ६.१.२३६.४) | तं वो दस्ममृतीषहम् | ११ |
| औशनम् (सौमम्) | (ग्राम. १.१.५.३) | प्रेष्ठं वो अतिथिंस्तुषे | ११ |
| औशनम् | ,, ,, | ,, ,, | १४ |

| *Technical name.* | *Reference.* | *Verse.* | *Page.* |
|---|---|---|---|
| कालेयम् (इडानिधनम्) | (ग्राम. ६.१.२३७.५-७) | तरोभिर्वो विदद्वसुम् | ९ |
| **कावम् (सौमम्)** | (ग्राम. १.३.३२.१) | कविमग्निमुप स्तुहि | १० |
| कावम् | ,, ,, | ,, ,, | १४ |
| काशीतम् (पौषम्) | (ग्राम. १.३.३३.१) | शं नो देवीरभिष्टये | ११ |
| दैवोदासम् (पौषम्) | (ग्राम. २.५.५१.१) | प्र दैवोदासो अग्निः | ११ |
| महावत्सप्रम् (ईकारणिधनम्) | (ग्राम. ८.९.३१७.५) | जगृह्मा ते दक्षिणम् | ९ |
| रौरवम् (इडानिधनम्) | (ग्राम. १४.५.५११.१५) | पुनानः सोम धारया | ९ |
| यज्ञायज्ञीयम् (वारुणम्) | (ग्राम. १.४.३५.४) | यज्ञायज्ञा वो अग्नये | १० |
| यज्ञायज्ञीयम् | ,, ,, | ,, ,, | १५ |
| यद्वाहिष्ठीयम् | (ग्राम. २.९.८६.१-२) | यद्वाहिष्ठं तदग्नये | १५ |
| यौधाजयम् (पदनिधनम्) | (ग्राम. १४.५.५११.१६) | पुनानः सोम धारया | ९,१५ |
| **वामदेव्यम् (प्राजापत्यम्)** | (ग्राम. ५.६.१६९.२) | कया नश्चित्र आ भुवत् | १० |
| वामदेव्यम् | ,, ,, | ,, ,, | १५ |
| **वारवन्तीयम् (त्वाष्ट्रम्)** | (ग्राम. ८.९.३२२.१) | अपूर्व्या पुरुतमान्यस्मै | ११ |
| वारवन्तीयम् | ,, ,, | ,, ,, | १५ |
| संहितम् (पदनिधनम्) | (ग्राम. १२.१.४६८.९) | स्वादिष्ठया मदिष्ठया | ९ |

## APPENDIX D.

Quotations from other works found in the text and commentary are listed below in alphabetical order. Quotations found in the text are printed in bold type.

| *Quotation.* | *Source.* | *Page.* |
|---|---|---|
| अन्वस्तौत् । | ब्राह्मणम् — ? | २६ |
| आपं चापि हलन्तानाम् । | म. भा. २.४.८१ | २० |
| एकादशिनोः परः षट्कस्तनुशिरा । मध्ये चेत् पिपीलिकमध्या । | शु. य. सर्वा. सू. २७.२८ | २७ |
| ककुदस्यावस्थायां लोपः । | पा. सू. ५.४.१४६ | २५ |
| **गायतो मुखादुदपतत् ।** | ब्राह्मणम् — ? | २३ |
| गायति च त्रायते च या वै सा गायत्री । या वै खलु गायति च वृथा संसारे मा क्लिश्यत तदुच्छित्तये मामेव भजध्वम् । | छा. उ. ३.१२.१ | २४ |
| गायत्रीमेव त्रिपदां सतीं चतुर्थेन अनुष्टोभतीति च ब्राह्मणम् । | नि. ७.३.१२ | २६ |
| गायत्री वा इदं सर्वं भूतम् । | गायत्रीविद्या — ? | ३५ |
| गायत्र्युष्णिक् । | का. स. सू. ५.१-२ | १७ |
| गायन्तं त्रायते यस्माद् गायत्री तेन सा स्मृता । | व्यास ? | २४ |
| चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि । | का. स. सू. ५.३ | १७ |
| छन्दांसि च्छादनात् । | नि. ७.३.१ | ३१ |
| छादयन्ति ह वा एनं छन्दांसि पापेभ्यः । | ब्राह्मणम् — ? | ३१ |

| *Quotation.* | *Source.* | *Page.* |
| --- | --- | --- |
| जगती गततमं छन्दो जज्जगतिर्वा जज्जलमनोऽसृजत् । | ब्राह्मणम् — ? | ३० |
| तद्यद् गायंस्तत्रेस्तस्माद् गायत्री नाम । | बृ. आ. ५.१४.४ | २४ |
| प्रजापतिरकामयत । प्रजायेयेति । स मुखतस्त्रिवृतं निरमिमीत । तमग्निर्देवता अन्वसृज्यत । गायत्री छन्दः । | तै. सं. ७.१.१.४ | १९ |
| यत् त्रिवृत् स्तोभः तत् त्रिष्टुभस्त्रिष्टुप्त्वम् । | ब्राह्मणम् — ? | २९ |

# INDEX

( Words from compounds are separated and listed in their alphabetical sequence. The hyphen at the end, beginning or at both the ends of a word indicates the position of the word in a compound. Technical terms and proper names are not split. Words printed in bold type are from quotations in the text. References are to page numbers. )

## विषयानुक्रमणिका

Kendriya Sanskrit Vidyapeetha Series—No. 3

# SAṀHITOPANIṢAD BRĀHMAṆA

WITH

BHĀṢYA OF DVIJARĀJA-BHAṬṬA

AND

VEDĀRTHAPRAKĀŚA OF SĀYAṆA

CRITICALLY EDITED BY

Dr. B. R. SHARMA, M.A., PH.D.,

*Director, Kendriya Sanskrit Vidyapeetha, Tirupati*

KENDRIYA SANSKRIT VIDYAPEETHA

TIRUPATI

1965

केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला – ३

# संहितोपनिषद्ब्राह्मणम्

श्रीवंशभूषण - द्विजराजभट्ट - श्रीविष्ण्वात्मज - विरचितेन भाष्येण
श्रीसायणाचार्यविरचितेन वेदार्थप्रकाशेन च
समन्वितम्

तच्च केन्द्रीयसंस्कृतविद्यापीठनिदेशकेन
डॉ. बे. रामचन्द्रशर्मणा
पाठभेदादिभिः संशोध्य संपादितम्

केन्द्रीयसंस्कृतविद्यापीठम्
तिरुपति
१९६५

ॐ

# संहितोपनिषद्ब्राह्मणम्

## श्रीवंशभूषण - द्विजराजभट्ट - श्रीविष्णवात्मज - विरचितेन भाष्येण

तथैव

श्रीसायणाचार्यविरचितेन

वेदार्थप्रकाशेन च समन्वितम्

## प्रथमः खण्डः

**द्विज –** नत्वा विघ्नच्छिदं देवं द्विजदेवगुरुं तथा ।
श्रीसदाफलजं विष्णुं भट्टादिशब्दधारिणम् ॥ १ ॥

श्रीवंशोदितचन्द्रं च स्वतः सर्वार्थवेदिनम् ।
त्र्यर्थदीपकं सामब्रह्मविज्ञानभास्करम् ॥ २ ॥ 5

सामब्रह्मरसज्ञानां विशुद्धज्ञानहेतवे ।
संहितोपनिषद्भाष्यं करिष्ये गुरुवाक्यतः ॥ ३ ॥

**अथातः संहितोपनिषदो व्याख्यास्यामः ॥ १ ॥**

शास्त्रादिषु ग्रन्थारम्भे वर्तमानोऽथशब्दः कुत्रचिदानन्तर्यार्थो व्याख्यातः । कुत्रचिन्मङ्गलार्थः । कुत्रचिदुभयार्थः । तत्र ऋषिप्रणीतेषु ग्रन्थेषु 10 पौर्वापर्यसंबन्धाद् भवत्वानन्तर्यार्थः । अत्र तु वेदव्याख्याने सर्वशाखाप्ररूढस्य वेदचतुष्टयस्य अनादिसिद्धत्वात्, कल्पाद्येऽपि विश्वेश्वरस्य निश्वासद्वारा सहैवोत्- 12

---

3. BPR. भद्रादिशतृ° for भट्टादिशब्द°.

9 PR. om. व्याख्यातः.

11. R. °संभवात् for °संबन्धात्; B. भवनं तथार्थः for भवत्वा°... .

12. BPV. कल्पादयोऽपि, R. कल्पादावपि for कल्पाद्येऽपि *see* CN; V. विश्वास° for निश्वास°; V. om. °एव°.

पन्नत्वात्, तथा पौर्वापर्यसंबन्धे क्रियमाणे प्रमाणाभावाच्च आनन्तर्यार्थो न घटते। मङ्गलार्थोऽप्याचार्यैरविघ्नतो ग्रन्थपरिसमाप्तये व्याख्यातो ग्रन्थारम्भे। इदं तु ब्राह्मणं वेदान्तर्भूतत्वादन्यस्यापि स्वयमेव मङ्गलकृत्। तेन मङ्गलार्थमपि व्याख्यातुं कथं शक्यते?

5 अथ च प्रथमपदस्यानर्थक्ये क्रियमाणे वेदस्य महद् दूषणं जायते। अतः संसिद्धस्यैव ग्रन्थस्याध्यापकाध्येतॄणां मङ्गलार्थे व्याख्यायमाने सार्थको भवत्यथशब्दः। किंच। अन्येषां गोभिल-लाट्यायन-कात्यायन-प्रभृतीनां नूतनशास्त्रकर्तॄणाम् आचार्याणां शिक्षापणा (!) र्थम्। समूलत्वप्रदर्शनार्थं च। तथा अन्यवेदग्रन्थारम्भेऽपि दृष्टोऽथशब्दः। तद्यथा — **अथ खल्वयमार्ष-**
10 **प्रदेशो भवति।** (आ. ब्रा. १.१) इति। अर्थान्तरम[प्य]स्ति तदुच्यते। ब्राह्मणं तु तावद्वेदविषयविधिज्ञानां सर्वत्र फलातिशयं प्रदर्शयति। तत् कथम्? यज्ञविषये सर्वत्र पूर्वं तावत् सामप्रयोगफलविशेषं प्रतिपाद्य तत उक्तविधिविदोऽपि सर्वत्र समानं फलं वदति। तद्यथा ज्योतिष्टोमाधिकारे — **तद्देवा यशो व्यभजन्त तस्याग्नी रौरवं प्राबृहत। तद्वै स पशुवीर्यं**
15 **(प्राबृहत। पशवो वै रौरवम्॥ पशुमान् भवति। य एवं वेद॥** तां. ब्रा. ७.५.७-९) इति। तथा — **अथेन्द्रो यौधाजयं प्राबृहत। तद्वै स वज्रं प्राबृहत। वज्रो वै यौधाजयम्॥ वज्रं भ्रातृव्याय प्रहरति। य एवं वेद॥** (तां. ब्रा. ७.५.१२-१३)। एवमन्यविषयेऽप्यर्थ-वादो दृश्यते। तथा — **मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्व-**
20 **मेधेन यजते। यश्चैनमेवं वेद॥** (श. ब्रा. ३.२.६.१) इत्यादिभिर्वाक्यैः उक्तविधिज्ञानमपि स्वर्गलक्षणं फलं प्रदर्शितम्। एवमिहापि पठ्यमानोऽथशब्द एतद्ग्रन्थोक्तविधिज्ञानां तद्वत् फलं प्रदर्शयति। तदुच्यते। **रहस्योपनिषदि** देवतात्वेन स्तोभवर्णने **अयं वाव लोको हाउकारः** (छा. उ. १.१३.१) इत्यस्मिन्न-धिकरणे अथशब्देन चन्द्रमा उक्तः। तेन एतच्छास्त्रपठितविधिज्ञानामपि ग्रन्थारम्भे
25 पठितश्चन्द्रलक्षणोऽथशब्दश्चान्द्रमसफलं ददाति। तत् किं चान्द्रमसं फलम्?

---

2. P. रम्भः for रम्भे°.
5. B. अथवा for अथ च.
7. R. om. कात्यायन.
21. BP. विपद्यमानो, R. विद्यमानो° for पठ्यमानो.

तापत्रयोपशमनम् । अज्ञानलक्षणतमोनाशश्च । ग्रन्थगौरवभयाद् अयमर्थस्त्वनेनैव वाक्येन समाप्यते । इह तावदेतच्छास्त्रारम्भस्य प्रयोजनं वक्तव्यम् । तत्प्रयोजनेनोक्तेनैव अतः-शब्दोऽपि व्याख्यातो भविष्यति ॥

इह हि **छान्दोग्ये** परमनिःश्रेयसप्रापकज्योतिष्टोमादियज्ञविधायकान्यष्टौ ब्राह्मणानि सन्ति । तत्र **ताण्डिब्राह्मणे** सप्त संस्थाः ससोमकाः एकाहाहीनाहर्गण- 5
सत्रसत्रायणभेदाः सहस्रसंवत्सरपर्यन्तनानारूपा यज्ञाः प्रदर्शिताः । तत्र त्रिसंस्थज्योतिष्टोमद्वादशाहौ सकलस्तोत्रस्तोमविधिविधानसहितौ पठितौ ॥

अथ एतद्ब्राह्मणानुक्तविधियज्ञविशेषाः **षड्विंशब्राह्मणे** प्रदर्शिताः । तद्यथा — सुब्रह्मण्याविधानम् । ज्योतिष्टोमोक्तसामच्छन्दोविधानम् । तत्रैव प्रतिस्तोत्रं न्यूनाक्षरफलप्रदर्शनम् । विश्वरूपाज्योतिर्गानविधिः । ब्रह्मवरणविचारः । 10
ऋग्वेदादिभ्रेषोल्बणप्रायश्चित्तानि । सौम्यचरुफलम् । धूर्गानम् । महर्त्विक्प्रदर्शनम् । सवनीयचमसयाजमानम् । ऋत्विग्न्यून[त]ातिरिक्त[त्व]ाभिचारचरणदोषशमनप्रायश्चित्ताचरणम् । दैवमानुषर्त्विग्वरणम् । देवयजनप्रार्थना । देवयजनप्रदेशप्रमाणं च । अवभृथविधिः । अभिचारयज्ञविष्टुतयः । द्वादशाहपरिशेषविधिविधानम् । श्येनेषुसंदंशवज्रवैश्वदेवसत्रकल्पः । अग्निहोत्रोत्पत्तिः । उत्पूतानुत्पूत- 15
स्कन्नप्रायश्चित्तम् । निर्मथ्याग्नावजायमाने कालातिक्रमभयात् गौणत्वेन लौकिकाग्निब्राह्मणहस्ताजाकर्णकुशस्तम्बेषु होमकल्पः । अग्निहोत्रहोमविधिप्रदर्शनम् । औदुम्बरी- 17

---

2. V. समाप्यताम् for समाप्यते; B. तत्र योजनो° for तत्प्रयोजनेनो°.

3. B. om. अपि.

4. B. °निःश्रेयसः प्रा°; V. निःश्रेयः सप्रा° for निःश्रेयसप्रा°.

6. V. °रूपयज्ञाः for °रूपा यज्ञाः; BP. संस्था for °संस्थ°.

8. R. om. °यज्ञ°.

9. BP. °ह्मण्य° for °ह्मण्या°.

10. P. °स्तोत्र° for स्तोत्रं; B. विश्वा रूपा; P. विश्वरूप° for विश्वरूपा°; BVP. °पदार्थ [:] for °वरणविचारः.

11. BVP. om. ऋग्वेदादिभ्रेषोल्बण°.

12, R. न्यूनातिरेकयज्ञविभ्रेषप्रायश्चित्तं for न्यूनता ... चरणम्.

13. P. °वर्णनम् for °वरणम्.

16. निर्मथ्याग्ना° *see* CN.

17. V. °जातकर्ण° for °जाकर्ण° *see* CN; V. °होत्रे होत्रहोम for °होत्रहोम°.

